सनाविध्यगोचरत्वेनोपास्यत्वेऽपि सगुणविदो न नैर्गुण्याप्तिरतत्क्रतुत्वात्तथा सगुणे जगत्कर्तृत्वादिगुणस्य सत्त्वेऽपि नोपासकस्य तदाप्तिस्तादृशगुणस्योपासनाविध्यगोचरत्वेनोपासकक्रत्वविषयत्वात् ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ इति ।

प्रत्यक्षं 'तं यथायथोपासते तदेव भवन्ति' इतिश्रुतिः । अनुमानं ।

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।

तं तमेवैति कौन्तेय सदा तद्भावभावितः [ भ० गी० ८ । ६ ] इति स्मृतिश्चैवमुपासनाविषयगुणस्यैवाऽऽप्तिं दर्शयतः ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ इति ।

'यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति' 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' [ बृ० १ । ५ । २३ ] इत्यादिलिङ्गादपि सगुणविदो भोगमात्रेण सगुणसाम्यं लभ्यते न तु जगत्कर्तृत्वादिकं सायुज्यशब्देन तादात्म्यमात्रस्य सलोकताशब्देन तत्समानभोगमात्रस्य लाभात् । अन्यथा सर्वलोकाभिमानिदेवतातादात्म्यापन्नस्य तत्समानलोकत्वोक्तिवैयर्थ्यादिति भावः ॥ २१ ॥

ननु ब्रह्मलोकादावेवोपासनाफलस्य भुक्तत्वादन्यकर्ममात्रस्य च विद्ययैव पूर्वं दग्धत्वाद्विदुषः पुनरस्मिँल्लोके परावृत्त्यनुपपत्तिः । न च श्रुत्यैवाऽऽवृत्तिं निषिध्यामृतत्वमुक्तमतोऽनावृत्तिरेव तस्येति वाच्यम् । 'इमं मानवमावर्तं नाऽऽवर्तन्ते' 'तेषामिह न पुनरावृत्तिः' इत्यादिश्रुतिष्विममितीहेतिशब्दाभ्यां कल्पान्तर आवृत्तिलाभात् । अत एवामृतत्वमपि श्रौतं गौणमेवेत्यत आह—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ (७) इति ।

विदुषः कल्पान्तरेऽप्यनावृत्तिरेव 'न स पुनरावर्तते' [ छा० ८ । १५ । १ ] इतिसामान्यमुखाच्छब्दाच्छ्रुतेः । इहेत्यस्य संसारमात्रार्थत्वे बाधकाभावादत एवेममित्यस्यापीदंजातीयार्थत्वाद्वर्तमानकल्पार्थकत्वेऽपि प्रतिकल्पवर्तिपुरुषान्प्रति वर्तमानकल्पबोधकत्वेन कल्पमात्रेऽनावृत्तिलाभात् ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादिस्मृत्या वर्तमानकल्पान्ते विदुषां कैवल्यबोधनेन तेषामनावृत्त्यावश्यकत्वाच्च । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' [ भ० गी० ८ । १६ ] इत्यादेरप्यश्वमेधादिना प्राप्ततल्लोकाविद्वत्परत्वाच्चेति शिवम् ॥ २२ ॥ ( ७ )

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

इति श्रीपरमहंसपरिव्राजकपरमानन्दसरस्वतीपूज्यपादशिष्य-
ब्रह्मानन्दसरस्वतीविरचितवेदान्तसूत्रमुक्तावल्यां
चतुर्थोऽध्यायः समाप्तः ।

---

समाप्तेयं ब्रह्मानन्दसरस्वतीविरचिता
वेदान्तसूत्रमुक्तावलिः